यस्मिन् सर्वाणि भूतानि ह्यात्मत्वेन विजानतः।
न वै तस्य भवेन्मोहो न च शोकोऽद्वितीयतः ॥५४

अयमात्मा हि ब्रह्मैव सर्वात्मकतया स्थितः।
इति निर्धारितं श्रुत्या बृहदारण्यसंस्थया ॥५५॥

अनुभूतोऽप्ययं लोको व्यवहारक्षमोऽपि सन्।
असद्रूपो यथा स्वप्न उत्तरक्षणबाधतः ॥ ५६ ॥

स्वप्नो जागरणेऽलीकः स्वप्नेऽपि जागरो न हि।
द्वयमेव लये नास्ति लयोऽपि ह्युभयो र्न च ॥५७॥

ननु द्वैतादर्शने कः पुरुषार्थ इत्याशङ्क्य तत्प्रतिपादिकां यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः तत्र को मोहः कः शोक एकत्वमनुपश्यत इति श्रुतिमर्थतः पठति। यस्मिन्नवस्थाविशेषे सर्वाणि भूतान्यात्मत्वेनात्मभावेन विजानतः अपरोक्षेण साक्षात् कुर्वतोऽधिकारिणः पुरुषस्य तस्येति षष्ठी सप्तम्यर्थे। तस्मिन्नवस्थाविशेषे वै निश्चयेन मोहो भ्रमो न भवेच्च पुनः शोको व्याकुलतापि न भवेत्। उभयत्र हेतुः अद्वितीयतः तत्कारणाभावादित्यर्थः॥ ५४ ॥

शोककारणद्वैताभाने प्रमाणमाह अयमिति। स वा अयमात्मा ब्रह्मविज्ञानमय इत्यादिरूपयेत्यर्थः। शेषं स्पष्टम् ॥५५॥

नन्वयं लोक एव तत्कारणे सति कथं शोकाद्यभाव उच्यत इत्याशङ्क्य सदृष्टान्तमाह अनुभूत इति स्पष्टम्॥ ५६ ॥

दृष्टान्तं विवृखन्नुक्तन्यायमन्यत्राप्यतिदिशति स्वप्न इति। अलीको मिथ्या द्वयं स्वप्नजागरणे लये सुषुप्तौ। शेषं स्पष्टम् ॥५७॥

त्रयमेव भवेन्मिथ्या गुणत्रयविनिर्मितम् ।
अस्य द्रष्टा गुणातीतो नित्यो ह्येकश्चिदात्मकः ॥५८॥
यद्वन्मृदि घटभ्रान्तिं शुक्तौ वा रजतस्थितिम् ।
तद्वद् ब्रह्मणि जीवत्वं वीक्ष्यमाणे न पश्यति ॥५९॥
यथा मृदि घटो नाम कनके कुण्डलाभिधा ।
शुक्तौ हि रजतख्याति र्जीवशब्दस्तथा परे ॥६०॥
यथैव व्योम्नि नीलत्वं यथा नीरं मरुस्थले ।
पुरुषत्वं यथा स्थाणौ तद्वद्विश्वं चिदात्मनि ॥६१॥

उक्तमुपसंहरन् फलितमाह त्रयमिति । त्रयं जाग्रदाद्यवस्थात्रयमेवमुक्तपरम्परव्यभिचारेण मिथ्या । मिथ्यात्वे हेतुः गुणेति । गुणत्रयविनिर्मितं मायाकल्पितमित्यर्थः । तर्हि किं सत्यमत आह अस्येति । अस्य अवस्थात्रयस्य । शेषं स्पष्टम् ॥ ५८ ॥

नन्ववस्थात्रयं मिथ्या भवतु जीवस्तु सत्यः स्यादित्याशङ्क्य सदृष्टान्तमुत्तरमाह यद्वदिति । ब्रह्मणि वीक्ष्यमाणे आत्मत्वेन साक्षात् कृते सति जीवत्वं न पश्यतीत्यन्वयः । अन्यत् स्पष्टमेव ॥ ५९ ॥

अज्ञानावस्थायां प्रतीयमानो यो जीवब्रह्मभेदः स नाममात्र इति बहुदृष्टान्तैराह यथेति । रजतस्य ख्यातिराख्या नामेति यावत् । परे परे ब्रह्मणि जीवशब्दस्तथा शेषं स्पष्टम् ॥ ६० ॥

न केवलं जीव एव नाममात्रः किन्तु सर्वं विश्वमपि ब्रह्मणि नाममात्रमित्यनेकदृष्टान्तैराह यथैवेति । स्पष्टम् ॥६१॥

यथैव शून्ये वेतालो गन्धर्वाणां पुरं यथा।
यथाकाशे द्विचन्द्रत्वं तद्वत् सत्ये जगत् स्थितिः ॥६२

यथा तरङ्गकल्लोलैर्जलमेव स्फुरत्यलम्।
पात्ररूपेण ताम्रं हि ब्रह्माण्डौघैस्तथात्मता ॥६३॥

घटनाम्ना यथा पृथ्वी पटनाम्ना हि तन्तवः।
जगन्नाम्ना चिदाभाति ज्ञेयं तत्तदभावतः ॥६४॥

सर्वोऽपि व्यवहारस्तु ब्रह्मणा क्रियते जनैः।
अज्ञानान्न विजानन्ति मृदेव हि घटादिकम् ॥६५

नाममात्रप्रपञ्चस्य मिथ्यात्ववासनादार्ढ्याय इममेवार्थं बहुभि र्लोकप्रसिद्धदृष्टान्तैः प्रपञ्चयति यथैव शून्य इत्यादिस्त्रिभिः। शून्ये निर्जने देशे वेतालः अकस्मादाभासमानो भूतविशेषः। गन्धर्वपुरस्यापि शून्याधिष्ठानत्वं ज्ञेयं गन्धर्वनगरं नाम राजनगराकारो नीलपीतादिमेघरचनाविशेषः स्पष्टमन्यत् ॥ ६२ ॥

यथा तरङ्गेति सुगमम् ॥ ६३ ॥

किञ्च घटेति। तत्र पादत्रयं स्पष्टम्। ननु किमनेन मिथ्यात्ववासनादार्ढ्येनेत्यत आह ज्ञेयमिति। तदभावतो नामाभावतस्तद्ब्रह्म ज्ञेयं वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादि श्रुतेः ॥ ६४ ॥

ननु यत्र हि द्वैतमिव भवतीत्यादिश्रुत्यर्थदर्शनेनावस्थात्रयविदेहमोक्षावुक्तौ न तु जीवन्मोक्ष इत्याशङ्क्याह सर्व इति। सर्वोऽपि लौकिको वैदिकश्चेति शेषं स्पष्टम्। अयं भावः। अज्ञाननिवृत्तिरेव जीवन्मुक्ति र्न तु द्वैतादर्शनमिति ॥ ६५ ॥

कार्य्यकारणता नित्यमास्ते घटमृदोर्यथा ।
तथैव श्रुतियुक्तिभ्यां प्रपञ्चब्रह्मणोरिह ॥ ६६ ॥
गृह्यमाणे घटे यद्वत् मृत्तिका याति वै बलात् ।
वीक्ष्यमाणे प्रपञ्चेऽपि ब्रह्मैवाभाति भासुरम् ॥६७॥
सदैवात्मा विशुद्धोऽस्ति ह्यशुद्धो भाति वै यदा ।
यथैव द्विविधा रज्जुर्ज्ञानिनोऽज्ञानिनोऽनिशम् ॥६८

तत्र हेतुं सदृष्टान्तमाह कार्य्येति । सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादित्यादि श्रुतिः । युक्तिस्तु कार्य्यकारणयोरन्यत्वे एककारणाज्ञानात् सर्वकार्य्यज्ञानं न स्यादित्यादि । सुगममन्यत् ॥ ६६ ॥

कार्य्यकारणयोरन्यत्वमेव दृष्टान्तेन स्पष्टयति गृह्यमाण इति । भासुरं प्रमाणनिरपेक्षतयैव भासनशीलं स्पष्टमन्यत् ॥ ६७ ॥

ननु ब्रह्मणि भासमाने प्रपञ्चो न भासेतेत्याशङ्कावस्थाभेदेनोभयमपि भासत इति सदृष्टान्तमाह सदैवेति । तत्र ज्ञानिनः सदैवात्मा विशुद्धः अज्ञानतत्कार्य्यप्रपञ्चमलरहितत्वान्निष्प्रपञ्चोऽस्ति अज्ञानिनस्तु सदैवाशुद्धोऽस्तीति भ्रमाद् विभाति । वै हीति तत्प्रसिद्धौ । उभयत्रापि दृष्टान्तः यथेति । यथा रज्जुर्ज्ञानिनः सर्पाभावतया निर्विषत्वेनाभयङ्करी अज्ञानिनस्तु सर्परूपतया विपरीतत्वेन भयङ्करीति द्विविधा भाति । अयं भावः ब्रह्म यद्यपि स्वयं प्रकाशत्वेन सदा भात्येव तथापि वृत्त्यारूढत्वेन पुरुषार्थोपयोगीति 'ज्ञानिनः प्रतिभाति नाज्ञानिनः सूर्य्यदीपादिरिव चक्षुष्मदन्धयोरितीति दिक् ॥ ६८ ॥

यथैव मृण्मयः कुम्भस्तद्वद् देहोऽपि चिन्मयः।
आत्मनात्मविभागोऽयं मुधैव क्रियते बुधैः ॥६९॥
सर्पत्वेन यथारज्जूरजतत्वेन शुक्तिका।
विनिर्णीता विमूढेन देहत्वेन तथात्मता ॥ ७० ॥
घटत्वेन यथा पृथ्वी पटत्वेनैव तन्तवः।
विनिर्णीता विमूढेन देहत्वेन तथात्मता ॥ ७१ ॥
कनकं कुण्डलत्वेन तरङ्गत्वेन वै जलम्।
विनिर्णीता विमूढेन देहत्वेन तथात्मता ॥७२॥
पुरुषत्वे यथा स्थाणुर्जलत्वेन मरीचिका।
विनिर्णीता विमूढेन देहत्वेन तथात्मता ॥७३॥
गृहत्वेनैव काष्ठानि खड्गत्वेनैव लोहता।
विनिर्णीता विमूढेन देहत्वेन तथात्मता ॥७४॥

नन्वात्मा यदि सदैव निष्प्रपञ्चत्वेन भाति तर्हि किमर्थं देहात्मभेदो वर्णित इत्याशङ्क्याविवेकिनो देहव्यतिरिक्तात्मबोधार्थं विवेकिनस्तु व्यर्थं एवेति सदृष्टान्तमाह यथेति। तत्राऽबुधैरित्यकारप्रश्लेषे मुधैव क्रियते अपि तु नेति काकुव्याख्यानम्। अन्यत् सर्वं सुगमम् ॥ ६९ ॥

इदानीमविवेकिनः कल्पितदेहतादात्म्यं सदृष्टान्तमाह सर्पत्वेनेति। घटत्वेनेति। कनकमिति। पुरुषत्व इति। गृहत्वेनेति। पञ्चानामप्येतेषां श्लोकानामर्थः स्फुटतर एवास्त्यतो न व्याख्यानं कृतम् ॥ ७० ॥—॥ ७४ ॥

यथा वृक्षविपर्यासो जलाद्भवति कस्यचित्।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः॥ ७५॥
पोतेन गच्छतः पुंसः सर्वं भातीव चञ्चलम्।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः॥७६॥
पीतत्वं हि यथा शुभ्रे दोषाद्भवति कस्यचित्।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः॥ ७७॥
चक्षुर्भ्यां भ्रमशीलाभ्यां सर्वं भाति भ्रमात्मकम्।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः॥७८॥
अलातं भ्रमणेनैव वर्त्तुलं भाति सूर्य्यवत्।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः॥७९॥
महत्त्वे सर्ववस्तूनामणुत्वं ह्यतिदूरतः।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः॥ ८०॥
सूक्ष्मत्वे सर्वभावानां स्थूलत्वञ्चोपनेत्रतः।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः॥८१॥
काचभूमौ जलत्वं वा जलभूमौ हि काचता।

नन्वन्यथानिर्णये किं कारणमिति चेत्तदज्ञानमेवेति सदृष्टान्तमाह यथा वृक्षेत्यादि द्वादशभिः॥ ७५॥
पोतेनेति पोतेन नौकया स्पष्टमन्यत्॥ ७६॥
पीतत्वमिति। चक्षुर्भ्यामिति। अलातमिति। महत्त्व इति स्पष्टम्। हीति सर्वलोकप्रसिद्धौ॥७७॥७८॥७९॥८०॥
सूक्ष्मत्वे इति। काचभूमाविति। यद्वदिति। अभ्रेष्विति।

तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८२ ॥
यद्वदग्नौ मणित्वं हि मणौ वा वह्निता पुमान्।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८३ ॥
अभ्रेषु सत्सु धावत्सु सोमो धावति भाति वै।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८४ ॥
यथैव दिग्विपर्य्यासो मोहाद्भवति कस्यचित्।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८५ ॥
यथा शशी जले भाति चञ्चलत्वेन कस्यचित्।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८६ ॥
एवमात्मन्यविद्यातो देहाध्यासो हि जायते।
स एवात्मपरिज्ञानाल्लीयते च परात्मनि ॥ ८७ ॥

यथेति। यथा वृक्षेत्यादिश्लोकानां स्फुटार्थत्वात् पिष्टपेषण-तुल्यत्वेन न व्याख्यानं कृतम् ॥८१॥८२॥८३॥८४॥८५॥

यथा शशीति शशील्युपलक्षणं सूर्य्यादीनामपि शेषं स्पष्टम् ॥ ८६ ॥

एवं द्वादशभिः श्लोकैरुक्तमर्थमुपसंहरति एवमिति। एव-मुक्तेन प्रकारेणात्मन्यविद्यातः आत्माज्ञानात् देहाध्यासो मनुष्योऽहमित्यादिबुद्धिर्जायते भवति। हीति प्रसिद्धौ। नन्वे-तस्य निवृत्तिः कुतो भवेदिति चेदात्मज्ञानादेवेत्याहोत्तरार्द्धेन स इति। स एव देहाध्यास एवात्मपरिज्ञानात् ब्रह्मात्मैक्य-साक्षात्कारात् परात्मनि अज्ञानतत्कार्य्यरहिते प्रत्यगभिन्ने ब्रह्मणि लीयते ब्रह्मस्वरूपेणावतिष्ठते। नह्यधिष्ठानं विना-रोपितस्य स्वरूपमस्ति चकारादध्यासकारकमज्ञानमपि लीयत

सर्वमात्मतया ज्ञानं जगत् स्थावरजङ्गमम् ।
अभावात् सर्वभावानां देहस्य चात्मता कुतः ॥८८
आत्मानं सततं जानन् कालं नय महाद्युते ! ।
प्रारब्धमखिलं भुञ्जन्नोद्वेगं कर्त्तुमर्हसि ॥ ८९ ॥
उत्पन्नेऽप्यात्मविज्ञाने प्रारब्धं नैव मुञ्चति ।
इति यच्छ्रूयते शास्त्रे तन्निराक्रियतेऽधुना ॥९०॥

इति। अन्यथाऽध्यासलयाभावादित्यर्थः न हि कारणे सति कार्य्यस्य लयः सम्भवति। तस्मादात्मज्ञानादेव सकारण-कार्य्याध्यासनिवृत्तिरित्यलं पल्लवितेन ॥ ८७ ॥

एतदेव विवृणोति सर्वमिति। आत्मता देहस्य नेत्यर्थः स्पष्टमन्यत् ॥ ८८ ॥

ननु ज्ञानिनो निष्प्रपञ्चात्मतया मम किं स्यान्नह्यन्य-भोजनेनान्यस्तृप्यतीति चेदत आह आत्मानमिति। भो महाद्युते! कामादिपराभवेण स्वहितसाधनोन्मुखस्त्वम् आत्मानं प्रत्यगभिन्नं सततम् आसुप्तिस्मृतिपर्य्यन्तं जानन् वेदान्तवाक्यै-र्विचारयन् कालं नय अतिक्रामस्व। विचारसाध्यज्ञानानन्तरं चाखिलं प्रारब्धं चरमदेहारम्भकं कर्म भुञ्जन् सुखदुःखा-भासानुभवेन क्षपयन् सन्नुद्वेगं कर्त्तुं नार्हसीत्यर्थः ॥ ८९ ॥

वस्तुतस्तु प्रारब्धमेव नास्ति कुतो भोगः भोगाभावे कुत उद्वेगकारणं तदभावे च कुतस्तरां तन्निषेधोपदेश इति वेदान्त-सिद्धान्तरहस्यं वक्तुं प्रतिजानत आचार्य्याः उत्पन्न इति। अत्रेयं प्रक्रिया जगत्प्रतीतिस्त्रिधा लौकिकी शास्त्रीयानु-भाविकी चेति। तत्राद्या पारमार्थिकी द्वितीयाऽपारमार्थिकी तृतीया तु प्रातिभासिकी। तासां निवृत्तिस्तु क्रमात् वेदान्त-

तत्त्वज्ञानोदयादूर्द्ध्वं प्रारब्धं नैव विद्यते।
देहादीनामसत्त्वात्तु यथा स्वप्नो विबोधतः ॥९१॥
कर्म जन्मान्तरीयं यत् प्रारब्धमिति कीर्त्तितम्।
तत्तु जन्मान्तराभावात् पुंसो नैवास्ति कर्हिचित्९२
स्वप्नदेहो यथाध्यस्तस्तथैवायं हि देहकः।
अध्यस्तस्य कुतो जन्म जन्माभावे हि तत् कुतः ॥९३
उपादानं प्रपञ्चस्य मृद्भाण्डस्येव दृश्यते।
अज्ञानञ्चैव वेदान्तैस्तस्मिन्नष्टे क्व विश्वता ॥ ९४ ॥

श्रवणादित्रयसाक्षात्कारप्रारब्धक्षयैर्भवति। नान्यथेति तत्रेयं प्रतिज्ञा अन्यप्रतीत्यभिप्रायेणेति ज्ञातव्यं श्लोकार्थस्तु स्फुट एव ॥ ९० ॥

तदेवाह तत्त्वेति। ज्ञानेन सर्वव्यवहारकारणाज्ञाननिवृत्तौ प्रारब्धाभाव इति श्लोकार्थः। पदार्थस्तु स्फुट एव ॥ ९१ ॥

इदानीं प्रारब्धशब्दं व्युत्पादयन्नुक्तमुपसंहरति कर्मेति। तत्र कर्म त्रिविधं सञ्चितक्रियमाणप्रारब्धभेदात्। तन्मध्ये भाविदेहारम्भकं सञ्चितं तथा वर्त्तमानदेहनिर्वर्त्यं क्रियमाणं प्रारब्धन्तु वर्त्तमानदेहारम्भकम्। तत्र यद्यपि सञ्चितं जन्मान्तरीयमेव तथापि भाविदेहस्य तत् प्रारब्धमेव भवति तेनेदं सिद्धमात्मनः स्वतः कर्त्तृत्वाभावात् कालत्रयेऽपि जन्म नास्तीति सर्वमवदातम् ॥ ९२ ॥

पूर्वोक्तं दृष्टान्तं विवृण्वन् सकारणजन्माभावे युक्तिमाह स्वप्नेति। जन्माभावे तत् प्रारब्धं कुतः स्पष्टमन्यत् ॥ ९३ ॥

ननु देहादिप्रपञ्चस्य यतो वेत्यादिश्रुतेः सत्यब्रह्मजन्य-

**यथा रज्जुं परित्यज्य सर्पं गृह्णाति वै भ्रमात् ।**
**तद्वत् सत्यमविज्ञाय जगत् पश्यति मूढ़धीः ॥९५॥**
**रज्जुरूपे परिज्ञाते सर्पखण्डं न तिष्ठति ।**
**अधिष्ठाने तथा ज्ञाते प्रपञ्चः शून्यतां गतः ॥९६॥**
**देहस्यापि प्रपञ्चत्वात् प्रारब्धावस्थितिः कुतः ।**

त्वात् कथं प्रातिभासिकत्वमिति चेदुच्यते उपादानमिति। अत्र कारणं द्विविधं निमित्तोपादानभेदात् तत्र निमित्तं नाम उत्पत्तिमात्रकारणम् उपादानन्तु उत्पत्तिस्थितिलयकारणम्। तत्र वेदान्तैः मायान्तु प्रकृतिं विद्यादित्यादिभिः प्रपञ्चस्योपादानमज्ञानं पठ्यते चकाराद् ब्रह्मापि। अत्रायं भावः न केवलं ब्रह्मैव जगत्कारणं निर्विकारत्वात्। नापि केवलमज्ञानं जड़त्वात्। तस्मादुभयं मिलित्वैव जगत्कारणं भवतीति। सत्यानृते मिथुनीकरोतीत्यादिश्रुतेः। तत्र दृष्टान्तः भाण्डस्य घटशरावादे र्मृदिव मृत्पिण्ड इव। तत्र जलस्थाने ब्रह्म पिण्डीकरणसामर्थ्य साम्यादज्ञानन्तु मृत्तिकास्थाने आवरकत्वसाम्यात् तत्र ब्रह्मणोऽविनाशित्वात् ब्रह्मज्ञानेन तस्मिन्नज्ञान एव नष्टे सति विश्वता जीवजगदीश्वरात्मकजगद्भावः क्व न क्वाप्यस्तीत्यर्थः ॥ ९४ ॥

मिथुनीभावस्यैव जगत्कारणत्वं सदृष्टान्तं प्रपञ्चयति यथा रज्जुमिति ॥ ९५ ॥

इदानीं यदुक्तं तस्मिन्नष्टे क्व विश्वतेति तत् प्रपञ्चयन् पूर्वोक्तं प्रारब्धाभावं सदृष्टान्तमुपसंहरति सार्द्धेन। रज्जुरूप इति स्पष्टम् ॥ ९६ ॥

किञ्च देहस्येति। ननु जीवन्मुक्तस्य ज्ञानिनः प्रारब्धा-

अज्ञानिजनबोधार्थं प्रारब्धं वक्ति वै श्रुतिः ॥९७॥
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।
बहुत्वं तन्निषेधार्थं श्रुत्या गीतञ्च यत् स्फुटम्॥९८
उच्यतेऽज्ञैर्बलाच्चैतत्तदानर्थद्वयागमः।
वेदान्तमतहानञ्च यतो ज्ञानमिति श्रुतिः ॥९९॥

भावे सति अत्र ब्रह्मसम्भूत इत्यादि श्रुतिः प्रारब्धं किमर्थं वक्तीति चेदुच्यते अर्द्धेन अज्ञानीति। श्रुतिः अज्ञानिजन-बोधार्थं प्रारब्धं वक्तीत्यर्थः। ज्ञानेन सर्वव्यवहारकारणेऽज्ञाने नष्टे सति ज्ञानिनः कथं व्यवहार इत्यज्ञानिभिराक्षिप्ते प्रार-ब्धादिति। तद्बोधार्थमिति। शेषं स्पष्टम् ॥ ९७ ॥

किं तर्हि ज्ञानिबोधार्थं वक्ति श्रुतिरिति चेदुच्यते क्षीयन्त इति। भिद्यन्ते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावर इति श्रुत्या कर्माणीति बहुत्वं यत् स्फुटं गीतं तत्तन्निषेधार्थं प्रारब्धाभावप्रतिपाद-नार्थम्। अन्यथा सञ्चितक्रियमाणापेक्षया कर्मणीति द्वित्वं गेयं तथा न गीतमतो ब्रह्मात्मसाक्षात्कारात् चिज्जड़ग्रन्थि-भेदेन सञ्चितक्रियमाणप्रारब्धाख्यत्रिविधकर्मक्षयान्ते परम-पुरुषार्थं ज्ञादिबोधार्थं श्रुति र्वक्तीति भावः ॥ ९८ ॥

उक्त वैपरीत्ये बाधकमाह उच्यते इति। एतत् प्रारब्ध-मज्ञैः श्रुतितात्पर्य्यानभिज्ञैर्बलादविवेकसामर्थ्याच्चेदुच्यते यथार्थतया प्रतिपाद्यते चकारादद्वयात्मानं न पश्यन्ति तदा-ऽनर्थद्वयागमो दोषद्वयप्राप्तिः। तत्र प्रारब्धरूपस्य द्वैतस्याङ्गी-कारे अनिर्मोक्षप्रसङ्ग एको दोषः मोक्षाभावे ज्ञानसम्प्र-दायोच्छेदरूपो द्वितीयो दोष इति। न केवलं दोषद्वयस्यैव

**त्रिपञ्चाङ्गान्यथो वक्ष्ये पूर्वोक्तस्य हि लब्धये।**
**तैश्च सर्वैः सदा कार्य्यं निदिध्यासनमेव तु ॥१००॥**

प्राप्तिरपि तु वेदान्तमतहानञ्च वेदान्तमतस्थाद्वैतस्य हानं त्यागो भविष्यति। प्रारब्धग्रहणरूपस्य द्वैतस्य याथार्थ्या- दित्यर्थः। तर्हि किं प्रतिपत्तव्यमित्यत आह यत इति। यतो यस्याः सकाशात् ज्ञानं भवति तादृशी सा श्रुति र्ग्राह्येति शेषः। सा श्रुतिस्तु "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः। नानुध्यायाद्‌ बहून् शब्दान् वाचोविग्लापनं हि तदिति।" एतदभिप्रायः क इति चेल्लिख्यते धीरो विवेकी ब्राह्मणो ब्रह्म भवितुमिच्छुस्तमेव वेदान्तप्रसिद्धमात्मानं विज्ञायादावुपदेशतः शास्त्रतश्च ज्ञात्वाऽनन्तरं प्रज्ञां शास्त्रा- चार्य्योपदिष्टविषयामपरोक्षानुभवपर्य्यन्तां जिज्ञासापरि- समाप्तिकरीं कुर्वीत। बहून् कर्मोपासनाप्रतिपादकान् शब्दान् वाक्यसन्दर्भान्नानुध्यायान्न चिन्तयेत्। तर्हि तान् ब्रूयात् किं नेत्याह वाच इति। तद्द्वैतशास्त्रपठनं वाचो- विग्लापनं विशेषेण श्रमकरं हीति सर्वानुभवसिद्धमित्यलं पल्लवितेन ॥ ९९ ॥

तदेवमेतावता ग्रन्थसन्दर्भेण मुख्याधिकारिणो वैराग्यादि- साधनचतुष्टयपूर्वकं वेदान्तवाक्यविचार एव प्रत्यगभिन्नब्रह्मा- परोक्षज्ञानद्वारा मुख्यं मोक्षकारणमित्यभिहितम् इदानी- मसकृद्विचार्य्यापि बुद्धिमान्द्यविषयासक्त्यादिप्रतिबन्धेनापरोक्ष- ज्ञानं यस्य न जायते तस्य मन्दाधिकारिणो निर्गुणब्रह्मो- पासनमेव मुख्यं साधनमित्यभिप्रेत्य ससाधनं ध्यानयोगं प्रतिजानत आचार्य्याः त्रिपञ्चेति। अथोशब्दोऽधिकारि- भेदार्थः। क्वचिदत इति पाठस्तस्मिन् पक्षे यतो मन्दाधि-

नित्याभ्यासादृते प्राप्तिर्न भवेत् सच्चिदात्मनः ।
तस्माद्ब्रह्म निदिध्यासेज्जिज्ञासुः श्रेयसे चिरम् ॥ १०१

यमो हि नियमस्त्यागो मौनं देशश्च कालता ।
आसनं मूलबन्धश्च देहसाम्यञ्च दृक्स्थितिः ॥ १०२॥

प्राणसंयमनञ्चैव प्रत्याहारश्च धारणा ।
आत्मध्यानं समाधिश्च प्रोक्तान्यङ्गानि वै क्रमात् १०३

सर्वं ब्रह्मेति विज्ञानादिन्द्रियग्रामसंयमः ।

कारी विचारं न लभतेऽतो हेतोरित्यर्थः । त्रिपञ्च त्रिगुणितानि पञ्च पञ्चदशेत्यर्थः । तत्संख्यकान्यङ्गानि निदिध्यासनाङ्गिसाधकसाधनविशेषान् यज्ञसाधकप्रयाजादिवदित्यर्थः । वच्ये वच्यामि । तैर्वच्यमाणैः सर्वैरङ्गैर्निदिध्यासनमेव कार्य्यं न तु तूष्णीमवस्थानमुचितमित्यर्थः । निदिध्यासनकर्त्तव्यप्रतिज्ञाप्रयोजनमाह पूर्वोक्तस्येति । पूर्वोक्तस्य स्वरूपावस्थानलक्षणमोक्षस्य सिद्धय इति । हीति वेदान्तप्रसिद्धौ तुशब्दः पातञ्जलवैलक्षण्यलक्षणेन मोक्षस्य सिद्धय इति । अनेनाष्टाङ्गप्रतिपादकं पातञ्जलमवैदिकत्वाद्वैशेषिकादिवदनादेयमिति ध्वनितम् ॥ १०० ॥

मन्दाधिकार्य्यन्यत् सर्वं कर्म सगुणोपासनविचाररूपं साधनञ्च विहाय श्रद्धया आचार्य्योक्तप्रकारेण निर्गुणं ब्रह्मैव निदिध्यासेदित्याह नित्येति स्पष्टम् ॥ १०१ ॥

ननु कानि तान्यङ्गानि यैः सह निदिध्यासनं कर्त्तव्यमित्यपेक्षायां तानि निर्दिशति यम इति द्वाभ्याम् । उक्तार्थावुभावपि श्लोकौ ॥ १०२ ॥ १०३ ॥

इदानीमेतेषां प्रत्येकं निर्देशक्रमेण स्वाभिमतानि लक्षणा-

यमोऽयमिति सम्प्रोक्तोऽभ्यसनीयो मुहुर्मुहुः ॥१०४
सजातीयप्रवाहश्च विजातीयतिरस्कृतिः।
नियमोहि परानन्दो नियमात् क्रियते बुधैः॥१०५॥
त्यागः प्रपञ्चरूपस्य चिदात्मत्वावलोकनात्।

न्याह सर्वमित्याद्येकविंशत्या। तत्र प्रथमोद्दिष्टं यमं तावद् दर्शयति सर्वमिति। सर्वमाकाशादिदेहान्तं जगद् ब्रह्म बाधसामानाधिकरण्यद्वारा स्थाणुपुरुषादिवदित्यर्थं इति। विज्ञानान्निश्चयाद्धेतोरिन्द्रियाणां श्रोत्रादीनामेकादशकरणानां ग्रामः समूहस्तस्य संयमः सम्यक् शब्दादिविषयाणां विनाशित्वसातिशयत्वदुःखदत्वादिदोषदर्शनात्। यमो विषयेभ्यो निवारणम् अयं यम इति सम्प्रोक्तः। न तु केवलमहिंसादिरित्यर्थः। ततश्च किमत आह अभ्यसनीय इति। अयं मुहुर्मुहुरभ्यसनीय इति॥ १०४॥

एवं यमं लक्षयित्वा नियमं लक्षयति सजातीयेति। सजातीयं प्रत्यगभिन्नं परं ब्रह्म तदेकाकारो वृत्तिप्रवाहः। यद्वा सजातीयानामसङ्गोऽहमविक्रियोऽहमित्यादिप्रत्यगभिन्नब्रह्मप्रत्ययानां प्रवाहः। च पुनः विजातीयतिरस्कृतिविजातीयं ब्रह्मात्मविलक्षणं जगत् पूर्वसंस्काराज्जायमाना तदाकारा वृत्तिरित्यर्थः। तस्य तिरस्कृतिर्दोषस्मृत्याऽधिकोपेक्षाऽनादर इत्यर्थः। अयं नियम इत्यर्थः। न तु केवलं शौचादिरित्यर्थः। हीत्युपनिषत्प्रसिद्धौ। नन्वनयोरुपनिषत्प्रसिद्धौ कः पुरुषार्थ इति चेदत आह परानन्द इति। ततश्च किमत आह नियमादित्यादि सुगमम्॥ १०५॥

इदानीं तृतीयं त्यागं लक्षयति त्याग इति। प्रपञ्च-

त्यागो हि महतां पूज्यः सद्यो मोक्षमयो यतः ॥१०॥
यस्माद्वाचो निवर्त्तन्ते अप्राप्य मनसा सह।
यन्मौनं योगिभिर्गम्यं तद्भवेत् सर्वदा बुधः ॥१०७॥
वाचो यस्मान्निवर्त्तन्ते तद्वक्तुं केन शक्यते।

रूपस्य प्रपञ्चो नाम रूपलक्षणो रूप्यते घटोऽयं पटोऽय-मित्यादिनामरूपतो निरूप्यते व्यवक्रियते प्रकाश्यते येन तत्प्रपञ्चरूपं सर्वाधिष्ठानभूतं पदार्थस्फुरणं तस्य चिदात्मत्वा-वलोकनाच्चिदजड़ं स्वत एव प्रकाशमानं ब्रह्म तदात्मा स्वरूपं यस्य तद्भावस्तस्यावलोकनमनुसन्धानं तस्माद्धेतोर्य-स्त्यागः नामरूपोपेक्षा स एव त्यागस्त्यागशब्दवाच्यः। ईशा-वास्यमिदं सर्वमित्यादि श्रुतिः। ह्येति विद्वदनुभवप्रसिद्धौ। नन्वयं त्यागो न कुत्रापि प्रसिद्ध इत्याशङ्क्याह महतां पूज्य इति। तत्र हेतुः सद्य इति। यतोऽयं त्यागः सद्योऽनुसन्धान-काल एव मोक्षमयः परमानन्दस्वरूपावस्थानरूपः अतएवात्म-तत्त्वविदामिष्टत्वादतिप्रसिद्धोऽयं त्याग इत्यर्थः। तस्मादयमेव मुमुक्षुणा कर्त्तव्यो नान्यः केवलस्वकर्माद्यकरणरूप इति भावः एवमग्रेऽप्यूह्यम् ॥ १०६ ॥

अथ मौनं लक्षयति यस्मादिति। शब्दप्रवृत्तिनिमित्त-जातिक्रियादेरभावात् मनोवाचामगोचरं यन्मौनं वक्तुमशक्यं यद्ब्रह्म तथापि योगिभिर्गम्यम् ज्ञानयोगिभिः प्रत्यगभिन्नत्वेन प्राप्यं तत्प्रसिद्धमेव ब्रह्मरूपं मौनम्। सर्वदा बुधो विवेकी भवेत्तदहमस्मीत्यनुसन्दध्यादित्यर्थः॥ १०७ ॥

नन्विदं प्रत्यगभिन्नब्रह्मानुसन्धानं ध्यानक[illegible] [illegible]दर्शमङ्गं प्रतीयते इत्याशङ्क्य स्वारस्यात् प्रकाश[illegible] मौनमेव

प्रपञ्चो यदि वक्तव्यः सोऽपि शब्दविवर्जितः ॥१०८॥
इति वा तद्भवेन्मौनं सतां सहजसंज्ञितम् ।
गिरा मौनन्तु बालानां प्रयुक्तं ब्रह्मवादिभिः ॥१०९॥
आदावन्ते च मध्ये च जनो यस्मिन्न विद्यते ।
येनेदं सततं व्याप्तं स देशो विजनः स्मृतः ॥११०॥
कलनात् सर्वभूतानां ब्रह्मादीनां निमेषतः ।
कालशब्देन निर्दिष्टो ह्यखण्डानन्द अद्वयः ॥१११
सुखेनैव भवेद् यस्मिन्नजस्रं ब्रह्मचिन्तनम् ।
आसनं तद्वि जानीयान्नेतरत् सुखनाशनम् ॥११२॥

लक्षयति सार्द्धेन वाच इति। अयं भावः शब्दप्रवृत्तिनिमित्ताभावाद् ब्रह्म यथा वागविषयं तथा नामरूपजात्यादिप्रपञ्चोऽपि सदसदादिविकल्पासहत्वाद्वागतीतः ॥ १०८ ॥

इतीति। इत्युक्तप्रकारेण ब्रह्मजगतो र्विवादत्यागरूपं वा तन्मौनं भवेत्। केषामित्याकाङ्क्षायां सताञ्चेदं प्रसिद्धमित्याह सतामिति। सत्पुरुषाणां सहजस्थितिनाम्ना प्रसिद्धमित्यर्थः। ननु वाङ्नियमनमेव प्रसिद्धं मौनमिति चेदत आहार्द्धेन गिरेति ॥ १०९ ॥

इदानीं देशं लक्षयति आदाविति। अत्र जनस्य त्रैकालिकाभाव आनुभविकः स्वप्रतीत्या ज्ञेयः। न तु लौकिकशास्त्रीयप्रतीतिभ्यां विरोधादिति भावः। स्पष्टमन्यत् ॥११०॥

अथ कालं लक्षयति कलनादिति। निमेषत आरभ्य कलनात् संसर्गस्थितिप्रलयाधारत्वादित्यर्थः। शेषं स्पष्टम् ॥१११॥

आसनं लक्षयति सुखेनैवेति। यस्मिन् सुखे सुखरूपि

सिद्धं यत् सर्वभूतानि विश्वाधिष्ठानमव्ययम्।
यस्मिन् सिद्धाः समाविष्टास्तद्वै सिद्धासनं विदुः ११३

यन्मूलं सर्वभूतानां यन्मूलं चित्तबन्धनम्।
मूलबन्धः सदा सेव्यो योग्योऽसौ राजयोगिनाम्११४

अङ्गानां समतां विद्यात् समे ब्रह्मणि लीयते।
नो चेन्नैव समानत्वमृजुत्वं शुष्कवृक्षवत् ॥११५॥

ब्रह्मणि चिन्तनं कर्त्तव्याकर्त्तव्यचिन्ता नैव भवेत् तद् ब्रह्मासनं विजानीयादित्यन्वयः। कीदृशं ब्रह्म अजस्रं कालत्रयाव-स्थायीत्यर्थः। सुगममन्यत्॥ ११२॥

प्रसङ्गादासनविशेषं लक्षयति सिद्धमिति। सिद्धञ्च तदा-सनञ्चाथवा सिद्धानामासनं सिद्धासनमिति कर्मधारयतत्पुरु-षाभ्यां ब्रह्मैवेत्यर्थः॥ ११३॥

अथ मूलबन्धं लक्षयति यन्मूलमिति। आकाशादिसर्व-भूतानां यन्मूलमादिकारणं ब्रह्म तथा चित्तबन्धनं चित्तस्य बन्धकारणं मूलाज्ञानं तदपि यन्मूलं यदाश्रयं पृथक् सत्ता-शून्यत्वादिति। यद्वा चित्तस्य बन्धनम् एकत्र लक्ष्ये निग्रहं तदपि यन्मूलं यस्य ब्रह्मणः प्राप्तिनिमित्तमित्यर्थः स मूल-बन्ध इत्यन्वयः। राजयोगिनां व्यवहारेऽप्यविच्छिन्नचित्तता-लक्षणो राजयोगस्तद्वतां ज्ञानपरिपाकयुक्तानामित्यर्थः। शेषं स्पष्टम्॥ ११४॥

इदानीं देहसाम्यं लक्षयति अङ्गानामिति। अङ्गानां ब्रह्मण्यध्यस्तानां स्वभावविषमाणामधिष्ठानसमत्वदृष्ट्या समतां विद्याज्जानीयात् चेत् समे ब्रह्मणि अङ्गवैषम्यमित्यत्राध्याहारः तच्चेन्नो लीयते समब्रह्मरूपतया न तिष्ठतीत्यर्थः। तर्हीत्यत्र

दृष्टिं ज्ञानमयीं कृत्वा पश्येद् ब्रह्ममयं जगत् ।
सा दृष्टिः परमोदारा न नासाग्रावलोकिनी ॥ ११६
दृष्टिदर्शनदृश्यानां विरामो यत्र वा भवेत् ।
दृष्टिस्तत्रैव कर्त्तव्या न नासाग्रावलोकिनी ॥ ११७॥
चित्तादिसर्वभावेषु ब्रह्मत्वेनैव भावनात् ।
निरोधः सर्ववृत्तीनां प्राणायामः स उच्यते ॥ ११८॥

शेषः । शुष्कवृक्षवदङ्गानामृजुत्वं सरलत्वमचञ्चलत्वञ्च यत्तत् समानत्वं नैव भवेदिति सम्बन्धः । अङ्गानां विषमस्वभावत्वादिति भावः ॥ ११५ ॥

इदानीं दृक्स्थितिं लक्षयति दृष्टिमिति । ब्रह्मणि फलव्याप्यत्वाभावेऽपि वृत्तिव्याप्यत्वात् दृष्टिमन्तःकरणवृत्तिं ज्ञानमयीमखण्डब्रह्माकारां कृत्वा जगत् सर्वं ब्रह्ममयं पश्येत् ब्रह्मैवेदं सर्वमित्येतावन्मात्रैव वृत्तिः कार्य्येति भावः । स्पष्टमन्यत् ॥ ११६ ॥

ननु तथापि ब्रह्मणि वृत्तिप्रवृत्तिनिमित्तजात्याद्यभावादिन्द्रियादिप्रत्यक्षविषयस्य जगतो ब्रह्मरूपत्वेन दर्शनं कथं स्यादित्याशङ्क्य स्वारस्यात् पक्षान्तरेणाह दृष्टीति । वाशब्दः पक्षान्तरे । दृष्टीत्यादिना श्रोत्रादिसर्वत्रिपुटीनामुपलक्षणं यत्र यस्मिन् ब्रह्मस्वरूपे दृष्ट्यादिसर्वत्रिपुटीनां विरामो लयो भवेत्तत्र तस्मिन्नेव प्रपञ्चातीते दृष्टिरन्तःकरणवृत्तिः कर्त्तव्या न नासिकाग्रावलोकिनीत्यर्थः ॥ ११७ ॥

अथ प्राणायामं लक्षयति चित्तादिति । मनोऽधीनत्वात् प्राणस्य मनोनिरोधः न तु प्राणनिरोधेनैव पातञ्जलाभिमतेन मनोनिरोधस्तदधीनत्वाभावादिति फलितार्थः ॥ ११८ ॥

निषेधनं प्रपञ्चस्य रेचकाख्यः समीरणः।
ब्रह्मैवास्मीति या वृत्तिः पूरको वायुरीरितः ॥११९
ततस्तद्वृत्तिनैश्चल्यं कुम्भकः प्राणसंयमः।
अयञ्चापि प्रबुद्धानामज्ञानां घ्राणपीड़नम् ॥१२०॥
विषयेष्वात्मतां दृष्ट्वा मनसश्चितिमज्जनम्।
प्रत्याहारः स विज्ञेयोऽभ्यसनीयो मुमुक्षुभिः ॥१२१
यत्र यत्र मनो याति ब्रह्मणस्तत्र दर्शनात्।

अमुं प्राणायामं स्वाभिमतेन रेचकादिविभागत्रयेण लक्ष-यति सार्द्धेन निषेधनमिति स्पष्टम् ॥ ११९ ॥

तत इति। अनात्मोपेक्षात्मानुसन्धानतद्दार्ढ्यानि रेच-कादिशब्दवाच्यानीति भावार्थः। नन्वयं त्रिविधोऽपि प्राणा-यामो न कुत्रापि श्रुत इत्यपेक्षायामत्राधिकारिणमाहार्द्धेन अयमिति। अयमुक्तलक्षणः प्राणायामश्चकाराङ्गत्रययुक्त इत्यर्थः। प्रबुद्धानां प्रकर्षेणासम्भावनादिराहितत्वेन बुद्धा-नामात्मबोधयुक्तानां निःसन्देहापरोक्षज्ञानिनामित्यर्थः। योग्य इत्यध्याहारः तर्ह्यज्ञानां कीदृश इत्यत आह अज्ञाना-मिति ॥ १२० ॥

इदानीं प्रत्याहारं लक्षयति विषयेष्विति। विषयेषु यद्वा शब्दादिषु अन्वयव्यतिरेकाभ्यामात्मतां सत्तास्फुरत्वा-प्रियतामात्रतां दृष्ट्वा अनुसन्धाय मनसोऽन्तःकरणस्य चिति-मज्जनं नामरूपक्रियानुसन्धानराहित्येन चित्स्वरूपतयाव-स्थानं स प्रत्याहारः। ततः किमत आह अभ्यसनीय इति ॥ १२१ ॥

धारणां लक्षयति यत्रेति। यत्र यत्र यस्मिन् यस्मिन्

मानसो धारणञ्चैव धारणा सा परा मता ॥१२२॥
ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः।
ध्यानशब्देन विख्याता परमानन्ददायिनी ॥१२३॥
निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः।
वृत्तिविस्मरणं सम्यक् समाधि र्ज्ञानसंज्ञकः ॥१२४

पदार्थे मनो याति गच्छति तत्र तत्र ब्रह्मणः सत्तादिमात्रस्य नामाद्युपेक्षया दर्शनादनुसन्धानान्मनसो धारणं ब्रह्मण्येव स्थिरीकरणं धारणेत्यर्थः। नन्वाधारादिषट्चक्रमध्ये एकत्र मनसो धारणं धारणेति प्रसिद्धमत आह सेति। सा अत्रोक्त-लक्षणा धारणा परोत्कृष्टा मता तत्त्वबोधवतामित्यर्थः। अन्या तु पातञ्जलाभिमता प्राणायामादिवदपरेति भावः। च एवेत्यव्ययद्वयं वेदान्तविद्वदनुभवप्रसिद्धिं द्योतयति ॥ १२२ ॥

अथात्मध्यानं लक्षयति ब्रह्मैवेति। सद्वृत्त्या सती प्रमाणान्तरबाधायोग्या वृत्तिस्तया वृत्त्या निरालम्बतया देहाद्यनुसन्धानराहित्येन स्थितिरवस्थानमित्यर्थः। शेषं स्पष्टम् ॥ १२३ ॥

अथान्त्यं समाधिरूपं पञ्चदशमङ्गं लक्षयति निर्विकार-तयेति। निर्विकारतया विषयानुसन्धानरहिततयान्तःकरण-वृत्त्या पुनरनन्तरमेव ब्रह्माकारतया यत् सम्यक् प्रपञ्च-संस्काररहितं ध्यातृध्येयाकारवृत्तिशून्यं वृत्तिविस्मरणं द्वैता-ननुसन्धानं स समाधिः पञ्चदशाङ्गमित्यर्थः। ननु वृत्तिविस्म-रणस्याज्ञानरूपत्वात् कथं समाधित्वमित्याशङ्क्य ब्रह्मात्मैक्य-बोधाभावे केवलवृत्तिविस्मरणस्य तथात्वेऽपि न ब्रह्मज्ञान-सहितस्य तथात्वमित्याशयेन समाधिं विशिनष्टि ज्ञानसंज्ञक

इममाकलिमानन्दं तावत् साधु समभ्यसेत् ।
वश्यो यावत् क्षणात् पुंसः प्रयुक्तः सन् भवेत् स्वयम्
॥ १२५ ॥

ततः साधननिर्मुक्तः सिद्धो भवति योगिराट् ।
तत् स्वरूपं न चैतस्य विषयो मनसो गिराम्॥१२६

समाधौ क्रियमाणे तु विघ्नान्यायान्ति वै बलात् ।
अनुसन्धानराहित्यमालस्यं भोगलालसम् ॥१२७॥

लयस्तमश्च विक्षेपो रसास्वादश्च शून्यता ।

इति । ज्ञानमिति संज्ञा यस्य स ज्ञानसंज्ञकः ब्रह्माकारतया स्फुरणरूप इत्यर्थः । उक्तश्च समाधिः संविदुत्पत्तिः परजीवैकतां प्रतीति ॥ १२४ ॥

इदानीं यदर्थं साङ्गमिदं निदिध्यासनमुक्तं तदाह इममिति । आकलिमानन्दं स्वरूपभूतानन्दाभिव्यञ्जकं निदिध्यासनमित्यर्थः । चकाराद् यथाबुद्धि वेदान्तविचारमपीति । स्पष्टमन्यत् ॥ १२५ ॥

एवमभ्यसतः फलमाह तत इति । साधननिर्मुक्तः साधनाभ्यासरहित इत्यर्थः । एतस्य योगिनः तद्वेदान्तप्रसिद्धं स्वरूपं ब्रह्मैवेति भावः ॥ १२६ ॥

अखण्डैकरसब्रह्मस्वरूपत्वे नावस्थानलक्षणमोक्षफलदोऽयं समाधिपर्य्यन्तो योगो गुर्वनुग्रहवतां सुकरोऽस्ति तथापि सुकर इत्यनादरो न कार्य्यः । विघ्नबाहुल्यसम्भवादित्याह द्वाभ्यां समाधाविति स्पष्टोऽर्थः ॥ १२७ ॥

लय इति । तत्र लयो निद्रा तमः कार्य्याकार्य्याऽविवेकः विक्षेपो विषयस्फुरणं रसास्वादो धन्योऽहमित्याद्यानन्दाका-

एवं यद्विघ्नबाहुल्यं त्याज्यं ब्रह्मविदा शनैः ॥१२८॥
भाववृत्त्या हि भावत्वं शून्यवृत्त्या हि शून्यता ।
ब्रह्मवृत्त्या हि पूर्णत्वं तथा पूर्णत्वमभ्यसेत् ॥१२९॥
ये हि वृत्तिं जहत्येनां ब्रह्माख्यां पावनीं पराम् ।
ते तु वृथैव जीवन्ति पशुभिश्च समा नराः ॥१३०॥
ये हि वृत्तिं विजानन्ति ज्ञात्वापि वर्द्धयन्ति ये ।
ते वै सत्पुरुषा धन्या वन्द्यास्ते भुवनत्रये ॥१३१॥
येषां वृत्तिः समावृद्धा परिपक्वा च सा पुनः ।
ते वै सद्ब्रह्मतां प्राप्ता नेतरे शब्दवादिनः ॥१३२॥

रावृत्तिः च पुनः शून्यता चित्तदोषः रागद्वेषादितीव्रवासनया चित्तस्य स्तब्धीभावः कषायः क्षुब्धतेत्यर्थः । स्पष्टमन्यत् ॥१२८॥

वृत्तिरेव बन्धमोक्षकारणमित्याह भावेति। भाववृत्त्या घटाद्याकारवृत्त्या भावत्वं तन्मयत्वं भवतीति शेषः। शून्यवृत्त्या अभाववृत्त्या शून्यता जड़तेत्यर्थः। हीति लोकप्रसिद्धौ तथा ब्रह्माकारवृत्त्या पूर्णत्वं हीति विद्वत्प्रसिद्धौ ततः किमत आह पूर्णत्वमिति ॥ १२९ ॥

इदानीं ब्रह्ममयीं वृत्तिं स्तोतुं तद्वृत्तित्यागपरान्निन्दति ये हीति। ये एनां ब्रह्माख्यां वृत्तिं जहति त्यजन्ति ते तु वृथैव जीवन्तीत्यन्वयः। स्पष्टमन्यत् ॥ १३० ॥

सम्प्रति तामेव वृत्तिं विवर्द्धयितुं ब्रह्मवृत्तिपरान् सत्पुरुषान् स्तौति ये हीति स्पष्टम् ॥ १३१ ॥

एवं ब्रह्मवृत्तिपरान् स्तुत्वाऽधुना तेषां ब्रह्मप्राप्तिरूपं फलमाह तेषामिति। सुगमम् ॥ १३२ ॥

कुशला ब्रह्मवार्त्तायां वृत्तिहीनाः सुरागिणः।
तेऽप्यज्ञानितया नूनं पुनरायान्ति यान्ति च॥१३३

निमेषार्द्धं न तिष्ठन्ति वृत्तिं ब्रह्ममयीं विना।
यथा तिष्ठन्ति ब्रह्माद्याः सनकाद्याः शुकादयः॥१३४

कार्य्ये कारणता याता कारणे न हि कार्य्यता।
कारणत्वं ततो गच्छेत् कार्य्याभावे विचारतः॥१३५

तानेव शब्दवादिनो निन्दन्ति कुशला इति। स्पष्टम्॥१३३॥

यत एवं तस्माद् ब्रह्मनिष्ठैर्ब्रह्मवृत्त्यैव सर्वदा स्थातव्यमिति सूचयितुं ब्रह्मादीनामुदाहरणमाह निमेषेति। यथा ब्रह्माद्यास्तथा सनकाद्याः यथा सनकाद्यास्तथा शुकाद्या इति सम्प्रदायो दर्शितः। एतेन ब्रह्मादिसेव्यत्वादतिश्रेष्ठोऽयं समाधिपर्य्यन्तो राजयोगः सर्वदा मुमुक्षुभिः सेवनीय इति ध्वनितम्॥ १३४॥

तदेवं स्वाभिमतं साङ्गं राजयोगमभिधाय पूर्वोपक्रान्तसांख्यापरपर्य्यायं वेदान्तविचारमुपसंहरति कार्य्य इत्यादिपञ्चभिः श्लोकैः। कार्य्य इति कार्य्ये घटपटादिरूपे विकारे कारणता सत्तत्वादिरूपा सर्वविकाराधिष्ठानता आयाताऽनुगता कारणे तु कार्य्यता न हीति प्रसिद्धम्। ततः कारणात् कार्य्याभावे कारणत्वं गच्छेत्। ननु कथं कारणे कार्य्याभाव इत्यत आह विचारत इति। यथायं दृष्टान्तस्तथाकाशादिकार्य्ये कारणता आकाशोऽस्ति भातीत्यादिव्यवहारहेतुभूता सत्यज्ञानादिरूपब्रह्मणः कारणता आयाता कारणे ब्रह्मणि तु आकाशादिकार्य्यता न हीति। अतः

अथ शुद्धं भवेद्वस्तु यद्वै वाचामगोचरम्।
द्रष्टव्यं मृद्घटेनैव दृष्टान्तेन पुनः पुनः ॥१३६॥
अनेनैव प्रकारेण वृत्ति ब्रंह्मात्मिका भवेत्।
उदेति शुद्धचित्तानां वृत्तिज्ञानं ततःपरम् ॥१३७॥
कारणं व्यतिरेकेण पुमानादौ विलोकयेत्।
अन्वयेन पुनस्तद्धि कार्य्यं नित्यं प्रपश्यति ॥१३८॥
कार्य्ये हि कारणं पश्येत् पश्चात् कार्य्यं विसर्जयेत्।
कारणत्वं ततो गच्छेदवशिष्टं भवेन्मुनिः १३९॥

परमार्थतः आकाशाद्यभावे ब्रह्मणः कारणतापि न हीति दार्ष्टान्तिकोऽर्थः ॥ १३५ ॥

ततः किमत आह अथेति। अथानन्तरं कार्य्यकारण-भावनिवृत्तौ यच्छुद्धं मनोवाचामगोचरं वस्तु तद्भवेत्। यतो वाचो निवर्त्तन्त इत्यादिश्रुतिसिद्धिद्योतनार्थो हि शब्दः। ननु बुद्धेः क्षणिकत्वेनैकदा तथा विचारितेऽपि पुनरन्यथैव भातीत्यत आह द्रष्टव्यमिति ॥ १३६ ॥

न केवलमयं विचारो ज्ञानसाधनमेवापि तु ध्यान-साधनमपीत्याह अनेनेति। अनेनैव प्रकारेण शुद्धचित्तानां वृत्तिज्ञानम् उदेति ततः परं ब्रह्मात्मिका वृत्तिर्भवेदिति योजना पदानामर्थस्तु स्फुट एव ॥ १३७ ॥

तमेव विचारं विशदयति द्वाभ्यां कारणमिति। आदौ प्रथमं कारणं व्यतिरेकेण कार्य्यविरहेण विचारयेत् पुनस्तत् कारणमन्वयेनानुवृत्त्या कार्य्येऽपि नित्यं प्रपश्यतीति ॥ १३८ ॥

अथवैवं विचारयेदित्याह कार्य्येति। आदौ कार्य्य-कारणमेव विचारयेत् पश्चात्तत्कार्य्यं विसर्जयेत् नानुसन्द-

भावितं तीव्रवेगेन यद्वस्तु निश्चयात्मना।
पुमांस्तद्धि भवेच्छीघ्रं ज्ञेयं भ्रमरकीटवत् ॥१४०॥
अदृश्यं भावरूपञ्च सर्वमेव चिदात्मकम्।
सावधानतया नित्यं स्वात्मानं भावयेद्बुधः॥१४१

ध्यात् कार्य्यवर्जने सति कारणत्वं स्वत एव गच्छेत्। एवं कार्य्यकारणवर्जनेऽवशिष्टं सच्चिन्मात्रं मुनिर्मननशीलः स्वयमेव भवेदिति ॥ १३९ ॥

ननु विचारजन्यापरोक्षज्ञानेन मुनेर्ब्रह्मत्वं भवतु नाम परन्तु परोक्षज्ञानिनः कथं भवेदित्याशङ्क्य तीव्रभावनया परोक्षज्ञानिनोऽपि ब्रह्मत्वं भवेदिति सदृष्टान्तमाह भावितमिति। अयं भावः यद्यपि परोक्षज्ञानेन प्रमातृगतावरणनिवृत्तौ सत्यामपि प्रमेयगतमावरणं न निवर्त्तते तथापि निश्चयात्मना निश्चययुक्तबुद्धिमता पुरुषेण यद्वस्तु सच्चिदानन्दब्रह्म तीव्रवेगेनाऽहर्निशं ब्रह्माकारवृत्त्या भावितं चिन्तितं तद्वस्तु ज्ञेयमपरोक्षेण ज्ञातुं योग्यं ब्रह्म शीघ्रमचिरेण पुमान् भवेत् प्रत्यगभिन्नब्रह्मरूपी भवतीत्यर्थः हीति विद्वत्प्रसिद्धौ। तत्र सर्वलोकप्रसिद्धं दृष्टान्तमाह भ्रमरकीटवदिति। भ्रमरेण कुतश्चिदानीय जीवन्नेव स्वकुड्यां प्रवेशितो यः कीटः स यथा भयात् भ्रमरध्यानेन भ्रमर एव भवति तद्वदिति ॥ १४० ॥

यदि पूर्वश्लोकोक्तदृष्टान्ते भावनाबलादेवान्यस्यान्यत्वं भवेत् तर्हि ब्रह्मविवर्त्तत्वेन ब्रह्मरूपस्य विश्वस्य ब्रह्मभावनया तद्रूपता भवेदिति किमु वक्तव्यमित्याशयेन सर्वात्मभावनामाह अदृश्यमिति। अदृश्यं परोक्षं भावरूपं प्रत्यक्षञ्च सर्वविश्वम्। यद्वा अदृश्यं द्रष्टृरूपं भावरूपं दृश्यं चकाराद्दर्शनम् एतत् सर्वं

दृश्यं ह्यदृश्यतां नीत्वा ब्रह्माकारेण चिन्तयेत्।
विद्वान्नित्यसुखे तिष्ठेद् धिया चिद्रसपूर्णया॥१४२॥
एभिरङ्गैः समायुक्तो राजयोग उदाहृतः।
किञ्चित् पक्वकषायाणां हठयोगेन संयुतः॥१४३॥
परिपक्वं मनो येषां केवलोऽयञ्च सिद्धिदः।

त्रिपुट्यात्मकं निर्विशेषस्फुरणमात्रस्वरूपं स्वात्मानमेव बुधः अद्वैतज्ञाननिष्ठः सावधानतया स्थिरवृत्त्या नित्यं भावयेत्। सकलमिदमहञ्च ब्रह्मैवेति सर्वदा पश्येदित्यर्थः॥ १४१॥

एतदेव विवृणोति दृश्यमिति। दृश्यं घटादिकमदृश्यतामधिष्ठानचिद्रूपतां नीत्वा। हीति विद्वत्प्रसिद्धौ। ब्रह्माकारेण कल्पितस्य परिच्छिन्नस्य नामरूपादेर्निवृत्तिपूर्वकं बृहदाकारेणापरिच्छिन्नरूपेण चिन्तयेदित्यर्थः। ततः किमत आह विद्वानिति। चिद्रसपूर्णया चिदेव रसश्चिद्रसश्चिदानन्दस्तेन पूर्णया धिया नित्यसुखे अविनाशिसुखे विद्वांस्तिष्ठेदिति॥ १४२॥

इदानीमुक्तं स्वाभिमतयोगमुपसंहरति एभिरिति। किञ्चित् स्वल्पं पक्वाः दग्धाः कषाया रागादयो येषां तेषां हठयोगेन पातञ्जलोक्तेन प्रसिद्धेनाष्टाङ्गयोगेन संयुतोऽयं वेदान्तोक्तो योग इति। शेषं स्पष्टम्॥ १४३॥

अयं राजयोग एव तेषां योग्य इत्याकाङ्क्षायां सर्वग्रन्थार्थमुपसंहरन्नाह परिपक्वमिति। येषां मनः परिपक्वं रागादिमलरहितमिति यावत् तेषामित्यध्याहारः। तेषां जितारिषड्वर्गाणां पुरुषधुरन्धराणां केवलः पातञ्जलाभिमतयोगनिरपेक्षः अयं वेदान्तादिमतो योगः सिद्धिदः प्रत्यगभिन्न-

गुरुदैवतभक्तानां सर्वेषां सुलभो जवात् ॥१४४॥

इति श्रीपरमहंसपरिव्राजकाचार्य्येण श्रीमच्छङ्कर-भगवता विरचिता अपरोक्षानुभूतिः समाप्ता ।

भिन्नब्रह्मापरोक्षज्ञानद्वारा स्वस्वरूपावस्थानलक्षणमुक्तिप्रदः । चकारोऽवधारणे नान्येषामपरिपक्कमनसामित्यर्थः । ननु परिपक्कमनस्त्वमतिदुर्लभमित्याकाङ्क्षायामस्यापि साधनत्वादतोऽप्यन्तरङ्गसाधनत्वाद्‌ गुरुदैवतभक्तानामिति । जवादतिशीघ्रमित्यर्थः । सर्वेषामितिपदेन वर्णाश्रमादिनिरपेक्षं मनुष्यमात्रं ग्रहीतव्यम् अतएव गुरुदैवतभक्तेरन्तरङ्गत्वम् । तथा च श्रुतिः "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मन इति ।" स्मृतयश्च "तद्विद्धि प्रणिपातेन" "श्रद्धावान् लभते ज्ञानमित्याद्याः ।" अयं भावः परिपक्कमनसोरपि दुःसाध्यानि साधनानि गुरुदैवतभक्तानां सुसाध्यानि भवन्तीति हेतोर्गुरुदैवतभजनमेव स्वधर्माविरोधेन सर्वैः कार्य्यमिति परमं मङ्गलम् ॥ १४४ ॥

पूर्णयमापरोक्षेण नित्यात्मज्ञानकाशिका ।
अरोक्षानुभूत्याख्या ग्रन्थराजप्रदीपिका ॥ १ ॥
नमस्तस्मै भगवते शङ्कराचार्य्यरूपिणे ।
येन वेदान्तविद्येयमुद्धृता वेदसागरात् ॥ २ ॥
यद्ययं शङ्करः साक्षाद्‌ वेदान्ताम्भोजभास्करः ।
नोदेष्यत्तर्हि काशेत कथं व्यासादिसूचितम् ॥ ३ ॥
अत्र यत् सम्मतं किञ्चित्तद्‌गुरोरेव मे न हि ।
असम्मतन्तु यत्किञ्चित्तन्ममैव गुरोर्न हि ॥ ४ ॥
यत्प्रसादादहंशब्दप्रत्ययालम्बनो हि यः ।
अहं स जगदालम्बः कार्य्यकारणवर्ज़ितः ॥ ५ ॥

तस्य श्रीगुरुराजस्य पादाब्जे तु समर्पिता।
दीपिका मालिका सेयं तत्कृपागुणगुम्फिता ॥ ६ ॥

योऽहं स्वाज्ञानमात्राज्जगदिदमभवं स्वादिदेहान्तमादौ
स्वस्वप्नादिव देव सोऽहमधुना स्वज्ञानतः केवलम्।
ब्रह्मैवास्म्यद्वितीयं परमसुखमयं निर्विकारं विबाधम्
जाग्रत् स्थानवदेव देवगुरुसत् स्वल्पप्रसादोत्थितात् ॥ ७ ॥

इति श्रीपरमहंसपरिव्राजकाचार्य्य-श्रीविद्यारण्यमुनिविरचिता
अपरोक्षानुभूतिदीपिका समाप्तिमगमत्।

---

पण्डितकुलपतिः
श्रीजीवानन्दविद्यासागर वि, ए,

PANDIT KULAPATI
JIBANANDA VIDYASAGARA, B. A.
*Superintendent, Free Sanskrit College, Calcutta.*